नारायणोपनिषत् अथवा नारायण अथर्वशीर्ष

कृष्णयजुर्वेदीया

ॐ सह नाववतु सह नौ भुनक्तु । सह वीर्यं करवावहै ।
तेजस्विनावधीतमस्तु । मा विद्विषावहै ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

(प्रथमः खण्डः
नारायणात् सर्वचेतनाचेतनजन्म)

ॐ अथ पुरुषो ह वै नारायणोऽकामयत प्रजाः सृजेयेति ।
नारायणात्प्राणो जायते । मनः सर्वेन्द्रियाणि च ।
खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ।
नारायणाद् ब्रह्मा जायते । नारायणाद् रुद्रो जायते ।
नारायणादिन्द्रो जायते । नारायणात्प्रजापतयः प्रजायन्ते ।
नारायणाद्द्वादशादित्या रुद्रा वसवः सर्वाणि च छन्दा□सि ।
नारायणादेव समुत्पद्यन्ते । नारायणे प्रवर्तन्ते । नारायणे प्रलीयन्ते ॥

(एतदृग्वेदशिरोऽधीते ।)

(द्वितीयः खण्डः
नारायणस्य सर्वात्मत्वम्)

ॐ । अथ नित्यो नारायणः । ब्रह्मा नारायणः । शिवश्च नारायणः ।
शक्रश्च नारायणः । द्यावापृथिव्यौ च नारायणः ।
कालश्च नारायणः । दिशश्च नारायणः । ऊर्ध्वश्च नारायणः ।
अधश्च नारायणः । अन्तर्बहिश्च नारायणः । नारायण एवेद□ सर्वम् ।

यद्भूतं यच्च भव्यम् । निष्कलो निरञ्जनो निर्विकल्पो निराख्यातः
शुद्धो देव एको नारायणः । न द्वितीयोऽस्ति कश्चित् । य एवं वेद ।
स विष्णुरेव भवति स विष्णुरेव भवति ॥
(एतद्यजुर्वेदशिरोऽधीते ।)

(तृतीयः खण्डः
नारायणाष्टाक्षरमन्त्रः)

ओमित्यग्रे व्याहरेत् । नम इति पश्चात् । नारायणायेत्युपरिष्टात् ।
ओमित्येकाक्षरम् । नम इति द्वे अक्षरे । नारायणायेति पञ्चाक्षराणि ।
एतद्वै नारायणस्याष्टाक्षरं पदम् ।
यो ह वै नारायणस्याष्टाक्षरं पदमध्येति । अनपब्रुवस्सर्वमायुरेति ।
विन्दते प्राजापत्य□ रायस्पोषं गौपत्यम् ।
ततोऽमृतत्वमश्नुते ततोऽमृतत्वमश्नुत इति । य एवं वेद ॥

(एतत्सामवेदशिरोऽधीते । ओं नमो नारायणाय)

(चतुर्थः खण्डः
नारायणप्रणवः)

प्रत्यगानन्दं ब्रह्मपुरुषं प्रणवस्वरूपम् । अकार उकार मकार इति ।
तानेकधा समभरत्तदेतदोमिति ।
यमुक्त्वा मुच्यते योगी जन्मसंसारबन्धनात् ।
ॐ नमो नारायणायेति मन्त्रोपासकः । वैकुण्ठभुवनलोकं गमिष्यति ।
तदिदं परं पुण्डरीकं विज्ञानघनम् । तस्मात्तटिदाभमात्रम् ।
( bhAshya तस्मात् तटिदिव प्रकाशमात्रम्)
ब्रह्मण्यो देवकीपुत्रो ब्रह्मण्यो मधुसूदनोम् । var ब्रह्मण्यो मधुसूदनयोम्
सर्वभूतस्थमेकं नारायणम् । कारणरूपमकार परं ब्रह्मोम् ।
एतदथर्वशिरोयोधीते ॥

विद्याऽध्ययनफलम् ।

प्रातरधीयानो रात्रिकृतं पापं नाशयति ।
सायमधीयानो दिवसकृतं पापं नाशयति ।
माध्यन्दिनमादित्याभिमुखोऽधीयानः पञ्चमहापातकोपपातकात् प्रमुच्यते ।
सर्व वेद पारायण पुण्यं लभते ।
नारायणसायुज्यमवाप्नोति नारायण सायुज्यमवाप्नोति ।
य एवं वेद । इत्युपनिषत् ॥

ॐ सह नाववतु सह नौ भुनक्तु । सह वीर्यं करवावहै ।
तेजस्विनावधीतमस्तु । मा विद्विषावहै ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं
विश्वाधारं गगनसदृशं मेघवर्णं शुभाङ्गम् ।
लक्ष्मीकान्तं कमलनयनं योगिभिर्ध्यानगम्यं
वन्दे विष्णुं भवभयहरं सर्वलोकैकनाथम् ॥